

## अष्टमः पाठः

# f=o.k%Zèot%



*(केचन बालकाः काश्चन बालिकाश्च स्वतन्त्रता-दिवसस्य ध्वजारोहणसमारोहे सोत्साहं गच्छन्तः परस्परं संलपन्ति।)*

देवेशः – अद्य स्वतन्त्रता-दिवसः। अस्माकं विद्यालयस्य प्राचार्यः ध्वजारोहणं करिष्यति। छात्राश्च सांस्कृतिककार्यक्रमान् प्रस्तोष्यन्ति। अन्ते च मोदकानि मिलिष्यन्ति।

डेविडः – शुचे! जानासि त्वम्? अस्माकं ध्वजः कीदृशः?



शुचिः – अस्माकं देशस्य ध्वजः त्रिवर्णः इति।

सलीमः – रुचे! अयं त्रिवर्णः कथम्?

रुचिः – अस्मिन् ध्वजे त्रयः वर्णाः सन्ति, अतः त्रिवर्णः। किं त्वम् एतेषां वर्णानां नामानि जानासि?

सलीमः – अरे! केशरवर्णः, श्वेतः, हरितः च एते त्रयः वर्णाः।

देवेशः – अस्माकं ध्वजे एते त्रयः वर्णाः किं सूचयन्ति?

सलीमः – शृणु, केशरवर्णः शौर्यस्य, श्वेतः सत्यस्य, हरितश्च समृद्धेः सूचकाः सन्ति।

शुचिः – किम् एतेषां वर्णानाम् अन्यदपि महत्त्वम्?





**डेविडः** - आम्! कथं न? ध्वजस्य उपरि स्थितः केशरवर्णः त्यागस्य उत्साहस्य च सूचकः। मध्ये स्थितः श्वेतवर्णः सात्त्विकतायाः शुचितायाः च द्योतकः। अधः स्थितः हरितवर्णः वसुन्धरायाः सुषमायाः उर्वरतायाश्च द्योतकः।

**तेजिन्दरः** - शुचे! ध्वजस्य मध्ये एकं नीलवर्णं चक्रं वर्तते?

**शुचिः** - आम् आम्। इदम् अशोकचक्रं कथ्यते। एतत् प्रगतेः न्यायस्य च प्रवर्तकम्। सारनाथे अशोकस्तम्भः अस्ति। तस्मात् एव एतत् गृहीतम्।

**प्रणवः** - अस्मिन् चक्रे चतुर्विंशतिः अराः सन्ति।

**मेरी** - भारतस्य संविधानसभायां 22 जुलाई 1947 तमे वर्षे समग्रतया अस्य ध्वजस्य स्वीकरणं जातम्?

**तेजिन्दरः** - अस्माकं त्रिवर्णः ध्वजः स्वाधीनतायाः राष्ट्रगौरवस्य च प्रतीकः। अत एव स्वतन्त्रतादिवसे गणतन्त्रदिवसे च अस्य ध्वजस्य उत्तोलनं समारोहपूर्वकं भवति।

जयतु त्रिवर्णः ध्वजः, जयतु भारतम्।

## शब्दार्थाः

| | | | |
|---|---|---|---|
| **त्रिवर्णः ध्वजः** | - | तीन रंगों वाला झंडा (तिरंगा झंडा) | tricolour flag |
| **संलपन्ति** | - | वार्तालाप करते हैं/करती हैं | talk |
| **प्रस्तोष्यन्ति** | - | प्रस्तुत करेंगे/करेंगी | will present |
| **मोदकानि** | - | लड्डू | a kind of sweet |
| **ऊर्जस्वितायाः** | - | ऊर्जा की | of energy |
| **अराः** | - | तीलियाँ | spokes |
| **उत्तोलनम्** | - | ऊपर उठाना/फहराना | hoisting |








1. **शुद्धकथनस्य समक्षम् 'आम्' अशुद्धकथनस्य समक्षं 'न' इति लिखत-**

(क) अस्माकं राष्ट्रस्य ध्वजे त्रयः वर्णाः सन्ति। ☐

(ख) ध्वजे हरितवर्णः शान्तेः प्रतीकः अस्ति। ☐

(ग) ध्वजे केशरवर्णः शक्त्याः सूचकः अस्ति। ☐

(घ) चक्रे त्रिंशत् अराः सन्ति। ☐

(ङ) चक्रं प्रगतेः द्योतकम्। ☐

2. **अधोलिखितेषु पदेषु प्रयुक्तां विभक्तिं वचनं च लिखत-**

| पदानि | विभक्तिः | वचनम् |
|---|---|---|
| यथा–त्रयाणाम् | षष्ठी | बहुवचनम् |
| समृद्धेः | ................. | ................. |
| वर्णानाम् | ................. | ................. |
| उत्साहस्य | ................. | ................. |
| नागरिकैः | ................. | ................. |
| सात्त्विकतायाः | ................. | ................. |
| प्राणानाम् | ................. | ................. |
| सभायाम् | ................. | ................. |

3. **एकपदेन उत्तरत-**

(क) अस्माकं ध्वजे कति वर्णाः सन्ति?

(ख) त्रिवर्णे ध्वजे शक्त्याः सूचकः कः वर्णः?

(ग) अशोकचक्रं कस्य द्योतकम् अस्ति?

(घ) त्रिवर्णः ध्वजः कस्य प्रतीकः?









4. **एकवाक्येन उत्तरत-**

(क) अस्माकं ध्वजस्य श्वेतवर्णः कस्य सूचकः अस्ति?

(ख) अशोकस्तम्भः कुत्र अस्ति?

(ग) त्रिवर्णध्वजस्य उत्तोलनं कदा भवति?

(घ) अशोकचक्रे कति अराः सन्ति?

5. **अधोलिखितवाक्येषु रेखाङ्कितपदानि आधृत्य प्रश्ननिर्माणं कुरुत-**

(क) अस्माकं त्रिवर्णध्वजः विश्वविजयी भवेत्।

(ख) स्वधर्मात् प्रमादं वयं न कुर्याम।

(ग) एतत् सर्वम् अस्माकं नेतृणां सद्बुद्धेः सत्फलम्।

(घ) शत्रूणां समक्षं विजयः सुनिश्चितः भवेत्।

6. **उदाहरणानुसारं समुचितैः पदैः रिक्तस्थानानि पूरयत-**

| | शब्दाः | विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|---|---|
| यथा- | पट्टिका | षष्ठी | पट्टिकायाः | पट्टिकयोः | पट्टिकानाम् |
| | अग्निशिखा | सप्तमी | अग्निशिखायाम् | ................. | ................. |
| | सभा | चतुर्थी | ................. | सभाभ्याम् | ................. |
| | अहिंसा | द्वितीया | अहिंसाम् | ................. | ................. |
| | सफलता | पञ्चमी | ................. | सफलताभ्याम् | ................. |
| | सूचिका | तृतीया | सूचिकया | ................. | ................. |











**7. समुचितमेलनं कृत्वा लिखत-**

| क | ख |
|---|---|
| केशरवर्णः | प्रगतेः न्यायस्य च प्रवर्तकम्। |
| हरितवर्णः | 22 जुलाई 1947 तमे वर्षे जातम्। |
| अशोकचक्रम् | शौर्यस्य त्यागस्य च सूचकः। |
| त्रिवर्णः ध्वजः | सुषमायाः उर्वरतायाः च सूचकः। |
| त्रिवर्णध्वजस्य स्वीकरणं | स्वाधीनतायाः राष्ट्रगौरवस्य च प्रतीकः। |





